॥ श्रीः ॥

# अथ
# छन्दश्चिह्नप्रकाशनम् ।

॥ श्रीरामंचगुरुंशेषंछंदःशास्त्रप्रकाशकम् ॥ करोमि सततंनत्वाछंदश्चिह्नप्रकाशनम् ॥ १ ॥ सानुस्वारो गुरुर्दीर्घःसंयोगप्रथमस्तुयः ॥ ज्ञेयोविसर्गसंयुक्तः पादांतस्थोविकल्पतः ॥ २ ॥ अथमात्राछन्दः ॥

॥ यस्याःपादेप्रथमेद्वादशमात्रास्तथातृतीयेऽपि ॥ अष्टादशद्वितीयेचतुर्थकेपंचदशसार्य्या ॥ ३ ॥ आर्योत्तरार्द्धतुल्यंप्रथमार्द्धमापिप्रयुक्तंचेत् ॥ कोविदत्तामुपगीतिंप्रकाशयंतेमहाकवयः ॥ ४ ॥ आर्या पूर्वार्द्धसमंद्वितीयमपियत्रभवतिशुद्धमते ॥ छंदोविदस्तदानींगीतिंताममृतभुक्प्रभाषंते ॥ ५ ॥ अथवर्णच्छंदः ॥ ॥ एकःगुःश्रीः ॥ ६ ॥ सास्त्रीयस्मिन्पादेद्वौगू ॥ ७ ॥ आदिमश्चेद्गुरुःसामृगीचांतिमः ॥ ८ ॥

कन्याज्ञेयाविद्वद्भिश्चत्वारोदीर्घावर्णाः ॥ ९ ॥ आद्य-
चतुर्थौपंचमवर्णेयत्रगुरुः स्यात्साक्षरपंक्तिः ॥ १० ॥
प्रथमचतुष्कंयदिचलघुस्यात् ॥ तदनुगुरूद्वौश-
शिवदनासा ॥ ११ ॥ तुर्यः पंचमकोपिस्याद्वर्णश्च
लघुश्चेत् ॥ विद्वद्भिस्समाचित्तैःसाप्रोक्तामदलेखा
॥ १२ ॥ ॥ अथाष्टाक्षरपंक्तिः ॥ ॥ श्लोकेष-
ष्ठोगुरुर्ज्ञेयःसर्वत्रपंचमोलघुः ॥ द्विश्चतुःपादयो-
र्ह्रस्वोदीर्घश्चसप्तमोन्ययोः ॥ १३ ॥ आदिभवस्तु-
र्य्यंगतःपंचमकश्चांतगतः ॥ यत्रगुरुःस्यात्क-
थितोमाणवकक्रीडमिदम् ॥ १४ ॥ क्रमाल्लघुःपुन-
र्गुरुःप्रवेशितोयदातदा ॥ विबोधयंतितांसदाबु-
धानगस्वरूपिणीम् ॥ १५ ॥ सर्वैर्वर्णैर्दीर्घैर्युक्ताविं-
श्रांतायावेदैर्वेदैः ॥ विद्युन्मालाछंदोविद्भिर्लोकेगी-
तासाबुद्धिस्था ॥ १६ ॥ ॥ अथनवाक्षरपंक्तिः ॥
चंपकमालायत्रभवेदंत्यविहीनाश्रेष्ठमते ॥ छंदासिद-
क्षायेकवयस्तन्माणिवंधंतेब्रुवते ॥ १७ ॥ आदिमं

गुरुर्यदि भवेदक्षरं खलु गुणगतम् ॥ यत्र सानन्तु हलमु-
खीचांतिमं गुणरसयतिः ॥ १८ ॥ षडपि चलघव-
स्तस्माद्गुरुरथ चरमौ स्याताम् ॥ यतिरथ मुनिभि-
र्द्वाभ्यां भुजगशिशुभृता सा स्यात् ॥ १९ ॥ ॥ अथ
दशाक्षरपंक्तिः ॥ ॥ शिष्य गुरुः स्यादाद्यचतुर्थं पं-
चमषष्ठं चांत्यमुपांत्यम् ॥ इन्द्रियबाणैर्यत्र विरामः सा
कथनीया चंपकमाला ॥२०॥ चत्वारः स्युर्यदि च गुर-
व आद्या अंत्यः कविवरजनैः ॥ हंसी ज्ञेया दशभिरपि
सा वेदैः षड्भिः पुनरथ यतिः ॥२१॥ आदौ चात्रिकम-
पि चेद्ध्रूयादंते यत्र खलु पुनर्दीर्घम् ॥ तच्छंदो दशभिरथ
ब्रूयुः संसारे हि पणवनामेदम् ॥२२॥ अथैकादशाक्षर-
पंक्तिः ॥ आद्या वर्णाः पंच यत्राथ संति दीर्घास्तद्वत्सप्त-
मश्चाष्टमोपि ॥ अंत्योपांत्यौ द्वौ गुरू चेद्विरामौ वेदै-
र्दीर्घैः शालिनी गीयते सा ॥२३ ॥ द्वावगुरू प्रथमा-
ग्रगतौ चेत्पंचमकः खलु षष्ठगतोपि ॥ अष्टतदंतगतौ
सुमते द्वौ दोधकवृत्तमिदं कथितं तत् ॥ २४ ॥ आद्यौ

गुरूद्वौभवनश्चतुर्थःपंचाष्टमौचेद्दशमस्तथांत्यः ॥
यत्रास्तिवर्णश्चगुरुःसुबुद्धेशेषेणगीताहितदेंद्रवज्रा ॥
॥ २५ ॥ यदालघुःस्यात्प्रथमस्तुवर्णस्तृतीयषष्ठौ
चलघूभवेताम् ॥ उपेंद्रवज्राकथितामुनींद्रैर्मनोग्रहे
स्याच्चलघुस्तदानीम् ॥ २६ ॥ कस्मिंश्चपादेभ-
वतींद्रवज्राह्युपेंद्रवज्रापुनरेवयत्र ॥ भक्त्यासमाराधि-
तविश्वनाथोपजातिरेषाफणिनाप्रगीता ॥ २७ ॥
अक्षरंप्रथममेवतृतीयंसप्तमंचदशमंचतथांत्यम् ॥
स्वागतेतिगुरुयत्रचगीतापंडितैर्जगति मोदकरासा
॥ २८ ॥ आख्यानकीस्यात्सुमतेतदानींयदीन्द्रव-
ज्राचरणःपुरस्तात् ॥ उपेंद्रवज्राचरणास्त्रयोन्येम
नीषिणोक्ताकविनाप्रसिद्धा ॥ २९ ॥ आदिमोयदि
तृतीयसप्तमःस्याद्गुरुश्चनवमोमहामते ॥ अंतिमंभ-
वतिदीर्घमक्षरंतांवदेत्सुनिपुणोरथोद्धताम् ॥ ३० ॥
॥ अथद्वादशाक्षरपंक्तिः ॥ गुरुयत्रतृतीयकमेवभवे-
त्तुषष्ठकमात्मरतेनवमम् ॥ विरतिप्रभवंसुमतेक-

थितंखलुतोटकवृत्तमिदंकविभिः ॥ ३१ ॥ भवेदा-
द्यवर्णश्चतुर्थःसुबुद्धेपुनःसप्तमोलोनवांत्यस्तथैव ॥
सभाभूषणायेमहांतःप्रशांताभुजंगप्रयातंतदाहुः क-
वींद्राः ॥३२॥ यदालघुस्यात्प्रथमाक्षरंपुनस्तृतीयकं
षष्ठमथापिसप्तमम् ॥ ग्रहंचरुद्रंकवयोक्षरंलघुतदातु
वंशस्थमिदंवदंतिहि ॥ ३३ ॥ वंशस्थपादेषुगुरु-
र्यदाभवेदाद्योपिवर्णःसुमतेतदाबुधाः ॥ वाक्कायचित्ते
षुविधूतकिल्बिषास्तामिन्द्रवंशां प्रवदंतिसाधवः ॥
॥ ३४ ॥ स्युर्वर्णादीर्घाःषड्यदासप्तमोलोद्वावग्रेत-
स्मात्स्तःपुनर्दीर्घवर्णौ ॥ ह्रस्वोवर्णोथोपांत्यपूर्व-
स्तथैवभूतैर्विश्रामोवैश्वदेवीतुरंगैः ॥ ३५ ॥ भवति
यत्रगुरुस्त्रितयाग्रगस्तदनुसप्तमकोदशमोभवेत् ॥
मतिमतांवरवृत्तमिदं तदाद्रुतविलंबितमंतिमकोय-
दा ॥ ३६ ॥ अथत्रयोदशाक्षरपंक्तिः ॥ आदौवर्णाः
पंचभवेयुर्यदिदीर्घास्तस्मादग्रेद्वौभवतोथापि चव-
र्णौ ॥ ह्रस्वौस्यातांद्वावथदीर्घौतुलघूगूवेदैरंध्रैर्यत्र

यतिर्मत्तमयूरम् ॥ ३७ ॥ यत्राक्षरंप्रथमकमेवबुध्य-
ते दीर्घंद्वितीयमपिचतुर्थमक्षरम् ॥ अष्टांतिमंखलु
दशमाद्यगंतथांत्यंसायतिर्युगनवभिःप्रभावती॥३८॥
आद्याःस्युर्यदिगुरवस्त्रयोष्टमोपि द्वौचांत्यौदशमग-
तस्तथाभवेताम् ॥ विश्रामोजगतिगुणैस्तथात्रादि-
ग्भिर्विज्ञेयाखलुकविभिःप्रहर्षिणीसा ॥ ३९ ॥ अथ
चतुर्दशाक्षरपंक्तिः ॥ आद्यौगुरूचभवतोथगुरुश्चतु-
र्थोयत्राष्टमोदशमकोत्तरगोगुरुःस्यात् ॥ अंत्यौगु-
रूजगतितांकवयोमहांतः शांतावसंततिलकांसततं
वदंति ॥ ४० ॥ पंचस्युर्ह्याद्यानतुयदिगुरवोदृष्टाव-
र्णाविद्वद्भिस्तदनुचलघवोमी ॥ षट्तस्मादग्रेथा-
पिजगतिचगुणादीर्घाविद्यंतेत्राक्षनवयातिरसंबाधा ॥
॥ ४१ ॥ भुवियदिलघवोभवंतिलनिश्चिताःषडथ
गुरुलघूगुरुश्चशशीलघू ॥ गुरुलघुगुरवःक्रमात्क-
विभिःकृताअसिसुखदयतिर्मुनावपराजिता ॥ ४२ ॥
॥ अथपंचदशाक्षरपंक्तिः ॥ ॥ शृणुसुभगय-

दिमुनिभिरथवसुभिर्यतिरितिभवतिजगतितुशशि-
कला ॥ चरमगुरुरथसुकविजनगदितासततमि-
तरलघुरतिसुखजनका ॥ ४३ ॥ यदिखलुपंचमो
मुनिर्गतोगुरुर्भवेद्दशमपरः पुनर्जगतियत्रतद्गुरुः ॥
कुशलधियोऽब्रुवन्विरचितस्त्रयोदशो मुनिवसुभिर्य-
तिश्चरमगःप्रभद्रकम् ॥ ४४ ॥ यदि भवतिगु-
रुश्चेत्सप्तमोद्वौतदंत्यौपुनरपिदशमांत्यौद्वौगुरूचेद्भ-
वेताम् ॥ जगतिननुगुरूद्वौमालिनीचांतिमौचेद्विर-
तिरपि यदिस्यादष्टभिः सप्तभिश्च ॥ ४५ ॥
अथषोडशाक्षरपंक्तिः ॥ ॥ यत्रगुरुर्भवेच्चशशिव-
दनशशिगतःशिष्यचतुर्थकश्चतदनुखलुरसभवः ॥
षोडशकैर्यतिश्च मुनिभिरथचनवभिस्त्वंत्यगुरुर्य-
दातुसुभगगजविलसितम् ॥ ४६ ॥ ननुयदिपंच-
मोमुनिगतोगुरुप्रयुक्तोदशमपरस्त्रयोदशगतस्तदाम-
हद्भिः ॥ विमलमतेंतिमापुनरुपांतगःकवींद्रैर्भुविख-
लुयत्रसाभवतिवाणिनीप्रसिद्धा ॥ ४७ ॥ यदापुनस्तु

षोडशाक्षरैःकृतंभवेत्क्रमाद्दीर्घदीर्घसंज्ञकैस्तदाविचक्षणैस्तुतत् ॥ विपश्चितांसदामनःप्रियंशुभप्रदंतथाप्रकथ्यते हि पंचचामरं दयार्द्रबुद्धिभिः ॥ ४८ ॥
अथसप्तदशाक्षरपंक्तिः ॥ ॥ भवेदाद्योवर्णोलघुरथ पुनःपंचगुरवस्तदग्रेपंचस्युर्यदिचलघवोद्वावपिगुरू ॥ त्रयस्ताभ्यामग्रेपुनरगुरवश्चेदथगुरुस्तदाषड्भीरुद्रैर्भवतिविरतिःसाशिखरिणी ॥ ४९ ॥ आदौवेदायदिचगुरवः पंचवर्णाभवंतितस्मादग्रेजगतिलघवोद्वौगुरूखंलघुःस्यात् ॥ स्यातांदीर्घौतदनुयुगलौह्रस्वएकोगुरूद्वौमंदाक्रांताश्रुतिरसहयैश्चेद्विरामाचसास्यात् ॥ ५० ॥ जगतिलघवःपंचप्राच्यास्ततोदशमांतिमस्तदनुसुमतेदीर्घौवर्णौयदित्रिचतुर्दशौ ॥ प्रभवतिपुनर्यत्रोपांत्योलघुः कविकोविदैर्यतिरपिरसैर्वेदैरश्वैः स्मृताहरिणीतिसा ॥ ५१ ॥ द्वितीयमथचाक्षरंगुरुचषष्ठकंचाष्टमंत्रयोदशपरापरं शुभमतेपुनर्दृश्यते ॥ सपंचदशमंतिमंतदनुयत्रभायाद्यतिर्गि-

रींद्रफणिभृत्कुलैर्जगतियत्रपृथ्वीतदा ॥ ५२ ॥
अथाष्टादशाक्षरपंक्तिः ॥ ॥ पंचाद्यादीर्घादशमक-
परौद्वौभवेतांचदीर्घौ तस्मादग्रेद्वौसुभगमतिमन्षो-
डशाद्यौतथांत्यौ ॥ विश्रामोभूतैःपुनरपिरसैःसप्तभिः
शांताचित्तैःसद्भिर्द्वृन्दैः कुसुमितलतावेल्लितागीयतेऽ-
सौ ॥५३॥ अथैकोनविंशत्यक्षरपंक्तिः ॥ आद्याश्चे-
द्गुरवस्त्रयःसुविदिताः षष्ठोष्टमोद्वादशस्तस्मादग्रगतौ
पुनःप्रभवतोवर्णौखलुद्वौगुरू ॥ दीर्घौपंचदशाग्र-
गौचचरमोयत्रैवविज्ञायतेतच्छंदोरविभिर्यतिश्चमुनि-
भिःशार्दूलविक्रीडितम् ॥५४॥ ॥ अथविंशत्यक्ष-
रपंक्तिः॥ ॥ चत्वारोयत्रवर्णारसगतमुनिगौदीर्घौसु-
विदितौछंदोविद्धिः कवींद्रैश्चतुरधिकदशःपंचाधिक-
दशः ॥ दीर्घौयत्रप्रयुक्तोद्विवसुगणगतोलोकेतुचरमो
ज्ञेयासप्ताश्वषड्भिर्यतिरथचपुनः सैषासुवदना ॥५५॥
॥ अथैकविंशत्यक्षरपंक्तिः ॥ ॥ आदौवेदाश्चवर्णा
ननुयदिगुरवःपंचमश्चाप्यदीर्घस्तस्मादग्रेचदीर्घौपुन-

रपिलघवःषड्गुरूद्वौलघुश्च ॥ दीर्घौद्वौषोडशांत्यौ लघुरथचपुनर्विंशकोविंशकांत्योदीर्घौ यत्राऽथभूया-न्मुनिमुनिमुनिभिःस्रग्धरेयंविरामः ॥ ५६ ॥ ॥ अथविषमाक्षरपंक्तिः॥ ॥ प्रथमाक्षरहीनमथादि-मेयदिभवेच्चरणेचतृतीयके ॥ कविभिःकथिताहरि-णीप्लुताद्रुतविलंबितमेवहिसन्मते॥५७॥ यदिचमुनि-तोगुरुःसुबुद्धेनवमगतोविषमेदिगग्रगाभ्याम् ॥ वि-षयवसुदिशागुरूतथांत्यौ समचरणेसततंतुपुष्पिता-ग्रा ॥५८॥ ॥ इतिश्रीमद्गंगारामोदासीनवर्य्य-शिष्येणोदासीनात्मस्वरूपेणकृतं छंदश्चिह्नप्रकाशनं संपूर्णम् ॥ ॥ ॥ ॥ ॥

---

पुस्तक मिलनेका ठिकाना—

गङ्गाविष्णु श्रीकृष्णदास,

'लक्ष्मीवेङ्कटेश्वर' छापाखाना

कल्याण—मुंबई.